यस्य वैकङ्कती कृणुष्व पाजोऽदितिरापो वा इद१ँ सर्वमेकमे-
कमापः पुनन्तु चत्वार्यग्निश्च सूर्यश्च नवं नवोभवति चत्वार्यायातु
पयोजोऽसि दशोत्तमे चत्वारि घृणिस्त्रीणि ब्रह्ममेतु मां पास्ते
ब्रह्महत्यां द्वादश ब्रह्ममेधयाऽघा न इमं भ्रूणहत्यां ब्रह्म
मेधवां ब्रह्मा देवानामिदं वीरहत्यामेकान्नविं१ँशतिरेकान्नविं१ँ-
शतिर्मेधा देवी मेधां म इन्द्रश्चत्वारि चत्वार्यामां मेधा द्वे मयि
मेधामेकमपैतु परं चार्तं प्राणमस्मन्नपाद्धरि१ँ शल्कैरग्नि मा छिदो
मृत्यो मा नो महान्तं मा नस्तोके प्रजापते स्वस्तिदा त्र्यम्बकं
ये ते सहस्रं द्वे द्वे मृत्यवे स्वाहैकं देवकृतस्यैकादश यद्वो देवाः
कामोऽकार्षीन्मन्युरकार्षीद्द्वे द्वे तिलाञ्जुहोमि गावः श्रियं प्रजाः
पञ्च तिलाः कृष्णाश्चोरस्य श्रीः प्रज्ञा तु जातवेदः सप्त प्राण-
वाक्त्वक्शिरो(र उ)त्तिष्ठ पुरुष पञ्च पृथिवीशब्दमनोवागव्य-
क्ताऽऽत्माऽन्तरात्मा परमात्मा मे क्षुधेऽन्नमय पञ्चदशाग्नये
स्वाहैकंचत्वारि१ँशदों तद्ब्रह्म नवं श्रद्धायां प्राणे निविष्टश्चतुर्वि१ँ-
शतिः श्रद्धायां दशाङ्गुष्ठमात्रः पुरुषो द्वे वाङ्म आसन्नष्टौ वयः
सुपर्णाः प्राणानां ग्रन्थिरसि द्वे द्वे नमो रुद्रायैकं त्वमग्ने द्युभिर्द्वे
शिवेन मे संतिष्ठस्व सत्यं प्राजापत्यस्तस्यैवमेकमेकमधीतिः ॥]

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके परिशिष्टत्वेन संगृहीतो
दशमः प्रपाठकः समाप्तः ॥ १० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके परिशिष्टत्वेन संगृहीतं दशमप्रपाठकभाष्यं समाप्तम् ॥ १० ॥



समाप्तमिदं सपरिशिष्टं सभाष्यं तैत्तिरीयारण्यकम् ।